॥ श्रीनिवासस्तोत्रम् ॥

अथ विबुधविलासिनीषु विष्वङ्मुनिमभितः परिवार्य तस्थुषीषु ।
मदविहृतिविकत्थनप्रलापास्ववमतिनिर्मितनैजचापलासु ॥ १॥

त्रिभुवनमुदमुद्यतासु कर्तुं मधुसहसागतिसर्वनिर्वहासु ।
मधुरसभरिताखिलात्मभावास्वगणितभीतिषु शापतश्शुकस्य ॥ २॥

अतिविमलमतिर्महानुभावो मुनिरपि शान्तमना निजात्मगुप्त्यै ।
अखिलभुवनरक्षकस्य विष्णोः स्तुतिमथ कर्तुमना मनाग्बभूव ॥ ३॥

श्रियःश्रियं षड्गुणपूरपूर्णं श्रीवत्सचिह्नं पुरुषं पुराणम् ।
श्रीकण्ठपूर्वामरबृन्दवन्द्यं श्रियःपतिं तं शरणं प्रपद्ये ॥ ४॥

विभुं हृदि स्वं भुवनेशमीड्यं नीळाश्रयं निर्मलचित्तचिन्त्यम् ।
परात्परं पामरपारमेनमुपेन्द्रमूर्तिं शरणं प्रपद्ये ॥ ५॥

स्मेरातसीसूनसमानकान्तिं सुरक्तपद्मप्रभपादहस्तम् ।
उन्निद्रपङ्केरुहचारुनेत्रं पवित्रपाणिं शरणं प्रपद्ये ॥ ६॥

सहस्रभानुप्रतिमोपलौघस्फुरत्किरीटप्रवरोत्तमाङ्गम् ।
प्रवालमुक्तानवरत्नहारतारं हरिं तं शरणं प्रपद्ये ॥ ७॥

पुरा रजोदुष्टधियो विधातुरपाहृतान् यो मधुकैटभाभ्याम् ।
वेदानुपादाय ददौ च तस्मै तं मत्स्यरूपं शरणं प्रपद्ये ॥ ८॥

पयोधिमध्येऽपि च मन्दराद्रिं धर्तुं च यः कूर्मवपुर्बभूव ।
सुधां सुराणामवनार्थमिच्छंस्तमादिदेवं शरणं प्रपद्ये ॥ ९॥

वसुन्धरामन्तरदैत्यपीडां (?) रसातलान्तर्विवशाभिविष्टाम् ।
उद्धारणार्थं च वराह आसीच्चतुर्भुजं तं शरणं प्रपद्ये ॥ १०॥

नखैर्वरैस्तीक्ष्णमुखैर्हिरण्यमरातिमामर्दितसर्वसत्त्वम् ।
विदारयामास च यो नृसिंहो हिरण्यगर्भं शरणं प्रपद्ये ॥ ११॥

महन्म हत्वेन्द्रियपञ्चभूततन्मात्रमात्रप्रकृतिः पुराणी ।
यतः प्रसूता पुरुषास्तदात्मा तमात्मनाथं शरणं प्रपद्ये ॥ १२॥

पुरा य एतस्तकलं बभूव येनापि तद्यत्र च लीनमेतत् ।
आस्तां यतोऽनुग्रहनिग्रहौ च तं श्रीनिवासं शरणं प्रपद्ये ॥ १३॥

निरामयं निश्चलनीरराशिनीकाशसद्रूपमयं महस्तत् ।
नियन्तु निर्भातृ निहन्तु नित्यं निद्रान्तमेनं शरणं प्रपद्ये ॥ १४॥

जगन्ति यः स्थावरजङ्गमानि संहृत्य सर्वाण्युदरेशयानि ।
एकार्णवान्तर्वटपत्रतल्पे स्वपित्यनन्तं शरणं प्रपद्ये ॥ १५॥

निरस्तदुःखौघमतीन्द्रियं तं निष्कारणं निष्कलमप्रमेयम् ।
अणोरणीयांसमनन्तमन्तरात्मानुभावं शरणं प्रपद्ये ॥ १६॥

सप्ताम्बुजीरञ्जकराजहासं सप्तार्णवीसंसृतिकर्णधारम् ।
सप्ताश्वबिम्बाश्वहिरण्मयं तं सप्तार्चिरङ्गं शरणं प्रपद्ये ॥ १७॥

निरागसं निर्मलपूर्णबिम्बं निशीथिनीनाथनिभाननाभम् ।
निर्णीतनिद्रं निगमान्तनित्यं निःश्रेयसं तं शरणं प्रपद्ये ॥ १८॥

निरामयं निर्मलमप्रमेयं निजान्तरारोपितविश्वबिम्बम् ।
निस्सीमकल्याणगुणात्मभूतिं निधिं निधीनां शरणं प्रपद्ये ॥ १९॥

त्वक्चर्ममांसास्थ्यसृगश्रुमूत्रश्लेष्मान्त्रविट्च्छुक्लसमुच्चयेषु ।
देहेष्वसारेषु न मे स्पृहैषा ध्रुवं ध्रुवं त्वं भगवन् प्रसीद ॥ २०॥

गोविन्द केशव जनार्दन वासुदेव विश्वेश विश्व मधुसूदन विश्वरूप
श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते ॥ २१॥

देवाः समस्तामरयोगिमुख्याः गन्धर्वविद्याधरकिन्नराश्च ।
यत्पादमूलं सततं नमन्ति तं नारसिंहं शरणं प्रपद्ये ॥ २२॥

वेदान् समस्तान् खलु शास्त्रगर्भान् आयुः स्थिरं कीर्तिमतीव लक्ष्मीम् ।
यस्य प्रसादात् पुरुषा लभन्ते तं नारसिंहं शरणं प्रपद्ये ॥ २३॥

ब्रह्मा शिवस्त्वं पुरुषोत्तमश्च नारायणोऽसौ मरुताम्पतिश्च ।
चन्द्रार्कवाव्यग्निमरुद्गणाश्च त्वमेव नान्यत् सततं नतोऽस्मि ॥ २४॥

स्रष्टा च नित्यं जगतामधीशः त्राता च हन्ता विभुरप्रमेयः
एकस्त्वमेव त्रिविधा विभिन्नः त्वां सिंहमूर्तिं सततं नतोऽस्मि ॥ २५॥

॥ हरिः ॐ शुभमस्तु ॥

॥ इति श्रीनिवासस्तोत्रं सम्पूर्णम् ॥